यवादुपस्थितस्य विधिगतशब्दस्यैव नियमइति पक्षोपिमयुक्तः, तद्धिता र्थस्य यज्यमानहविरुद्देश्यत्वाख्यस्यार्थे बाधेनान्वयानुपपत्ते, यज्यमान हविरुद्देश्यभूतशब्दाभिधेयत्वलक्षणात् प्रधानभूते तद्धिते लक्षणापत्ते श्यु क्तेव । तद्वर प्रातिपदिकएव गुणभूते पदलक्षणेति ।

किञ्चैवं " अग्नयेपावकाये " त्यादा वेकस्यैव पदस्योच्चारणनियमो पपत्तेः न पदद्वयोच्चारणापत्तिः अतो महेन्द्रपदस्योच्चार्यत्वेन देवतात्वा श्चैन्द्रमन्त्रेणाभिधानोपपत्तिः, अतश्चोत्कर्षापत्ति स्तदवस्थैव ।

सूत्रन्तु-श्रुत्या-विधिगत शब्देनैव, देवतायाः, कर्मणि, समवायात्- सम्बन्धादिन्द्रशब्देन महेन्द्रप्रकाशनानुपपत्ते र्ना त्कर्षं सम्भवइति व्याख्येयम् ।

॥ ५ ॥ सू - व्यपदेशभेदाच्च ॥ २ - १ - १७ ॥

इतश्च नैन्द्रपदेन महेन्द्राभिधानं । अन्यथा सान्नाय्ये "वहुदुग्धीन्द्राय देवेभ्यो वहुदुग्धि महेन्द्रायदेवेभ्य " इति द्वयोर्मन्त्रयो स्समाम्नातयो रन्योन्य प्रकाशकार्ये विकल्पापत्तिः । अस्मन्मते त्वैन्द्रेण सान्नाय्य गतेन्द्र प्रकाशना न्माहेन्द्रेणच तद्गतमहेन्द्रप्रकाशना न्मन्त्रद्वयव्यपदेशव्यवस्थोपेत न विकल्पः । अतश्चे न्द्रमहेन्द्रयो रधिष्ठानैक्येपि विशेषणांशभेदादुद्दे श्यशब्दभेदाच्च भेदावगमे नैन्द्रमन्त्रेणाभिधानानुपपत्ते रुत्कर्षो निवारणम् ।

॥ ६ ॥ सू गुणश्चानर्थकस्स्यात् ॥१–१ १८॥

यदप्युक्त महेन्द्रप्रातिपदिकेन महत्त्वविशिष्ट इन्द्रे भिहितेपि रा जपुरुषशोभन इतिव द्विशेष्यमात्रस्यैव तद्धितार्थान्वय इति । तन्न, तथा सति गुणवाचिमहत्पदानर्थक्य प्रसङ्गात् । नहि तस्य राजपदवदर्थ द्वारेणोपलक्षकता संभवति, देवतायास्स्वरूपेण कर्मण्य सम्बन्धात् । किंतुशब्दोच्चारण द्वारातदुपकारकत्वात् । महत्पदस्यापि तद्द्वारैवो पलक्षकता वाच्या । ततश्च तस्याप्युच्चार्यत्वात् देवतात्वां सर्गत्पवगते र्नमहत्त्वरहितस्येन्द्रस्य तद्धितार्थान्वयस्सम्भवति । किंच सम्भवति वि धेयत्व विशेषणत्वेनार्थवत्वे उपलक्षणत्वस्य स्तावकत्वस्य चान्याय्यत्वाच्च

शुद्धस्यैंद्रस्य देवतात्वं । राजपुरुषशोभन इत्यादौतु प्रमाणांतरानुरोधेन तथांगीकरणमिति न किंचिदेतत् । अतएव च सान्नाय्ये "ऐंद्रं दध्य मावास्यायामैंद्रपयोमावास्यायां माहेंद्रं दध्यमावास्यायां माहेंद्रं पयोमा वास्याया"मिति व्यपदेशभेदः । अन्यथा तत्रापि महत्पदानर्थक्यम् ।

॥७॥ सू — तथा याज्यापुरोरुचोः ॥२ - १ - १९॥

तथातत्राप्य एवेंद्र महेंद्र देवत्ययाज्यापुरोनुवाक्ययो र्भेदेनाम्नान मपींद्रमहेंद्रयो र्भेद एवावकल्पते, अन्यथा एकेनकार्यसिद्धे रितराम्नान मन र्थकं विकल्पोवा प्रसज्येत । नच भवन्मतेप्येकापूर्वसाधनतया ऐंद्रम हेंद्रयो र्धर्मसाकर्यापत्ते विकरणानिवारणम्, सम्मार्जनादिव स्पष्टविनियत निर्देशेन सांकर्यानापत्ते ।

वस्तुतस्तु – मन्त्राणां लिंगेन मुख्यपदार्थे विनियोगात् व्रीहीणां मेधसुमनस्यमान इति वदेकापूर्वसाधनीभूते द्रव्यान्तरे प्रमाणाभावेन सांकर्यप्रसंग एव नास्ति । अतो याज्यापुरोनुवाक्ययो र्भेदाम्नानमपि देवता भेद साधकम् । सूत्रे पुरोरुक्छब्द श्शस्त्रगत मन्त्रविशेषवाचय पि लक्षणया पुरोनुवाक्यपरो द्रष्टव्यः ।

॥८॥ सू - वशाया मर्थसंयोगात ॥ २ - १ - २० ॥

यातु – वशात्व गुणविशिष्टद्रव्यविधानेनैव छागशब्देन विशेष्य मात्र प्रकाशनं दृष्टमित्युक्तं, तद्वशात्वस्य स्वरूपतएवोपकारकतया तुपा दानेणापि स्मृत्याकर्मण्यनुष्ठानोपपत्ते नोपयं शब्दोच्चारणापेक्षा । प्रकृतेतु महत्त्वस्य महत्पदोच्चारण द्वारेणैवोपकारकतया ऽनुच्चरितस्य साधनत्वं संभवतीति विशेषः ।

॥९॥ सू - यत्रेतिचार्थ वत्त्वास्यात् ॥२ १ — २१॥

[1] ननु – यत्रमाहेंद्रग्रहसन्निधावय मैंद्रः प्रगाथ पठितः, तत्रैवास्य म मीतारधाग्निपदवल्लक्षणया महत्त्वविशिष्टेंद्र प्रकाशकत्वेन नियोक्षकल्पनाद

र्थवत्त्वोपपत्तिः । वस्तुतस्तु नेदृशस्थले लक्षणा यागवेळायां महेंद्रपद प्रयोगेपि मंत्रविशेष्यभूतेन्द्रमात्र प्रकाशनेन मंत्रस्या पूर्वीयदेवतात्वाश्रयभूतेंद्र प्रकाशनार्थत्वेनाप्युपपत्तेः; मनोतास्याग्निशब्देतु देवतावाचि मनोतापदसामानाधिकरण्येन लक्षणांगीकरणमित्युक्त मंत्राधिकरणे । तत श्च यथापठितस्याप्युपपत्ते नोत्कर्षोपपत्तिः । अथवा पूषानुमंत्रणमंत्रवद्‌बेंद्र प्रमाणबाधेनोत्कर्षांगीकारेपि न क्षतिः । नच तत्र यागानुमंत्रणमंत्रसमा ख्याव[दिह सम्बन्धसामान्यबो[बा]धक प्रमाणाभावेनो त्कर्षस्या प्युनुपपत्ते रानर्थक्यापत्तिः, एद्रयागांतरे तदभावेपि ज्योतिष्टोमप्रकरणस्थैंद्रग्रहाभ्यासे प्रकरणस्यैव सामान्यसम्बन्धबो[बा]धकस्य सत्त्वेनोत्कर्षोपपत्तेः । अतश्च यत्र प्रकरण एवेंद्रयाग स्तत्रास्य मगाधस्यो त्कर्षे प्यर्थवत्त्वोपपत्तिरिति ।

॥१०॥ सू — नत्वाम्नातेषु ॥ २ - १ - २१ ॥

नचैंद्रस्य मगाधस्य प्रकरणे उत्कर्षसंभवे प्यन्येषु तत्तद्‌ग्रहा भ्यासंसन्निधा वाम्नातेषु मंत्रेषु " याम्याशंसति शिपिविष्टव तीशंसति पितृदेवाया शंसति कुसुंभकसूक्त मन्वाह अक्षि सूक्तमन्वाहमूषिकसूक्तमन्वाहे"त्यादिविधिविहितेषु प्रकरणेपि यमादीनाम भावा त्तत्रोत्कर्षानुपपत्तेः, प्रकरणबहिर्भूत यमादिदैवत्यकर्मणि च सा मान्यसम्बन्धबोधक प्रमाणाभावेनो त्कर्षानुपपत्तेः, कुसुम्भकादीनां चान्यत्रापि देवतात्वाभावेन सुतरां तदनुपपत्ते र्नार्थवत्त्वोपपत्ति रिति वाच्य,

॥११॥ सू — दृश्यते ॥२ - १ - १३॥

सर्वेषा मेवार्थवत्वोपपत्तिः । तथाहि – मण्डूकसूक्तस्य तावद" मण्डूकेनाग्निंविकर्षती " ति विहितमण्डूक प्रकाशकत्वेनाग्ना वुपयाग । नच तस्या नारभ्याधीतत्वेन सामान्यसम्बन्धबोधक प्रमा णाभावः, मण्डूकसूक्तस्य प्रकरणाज्ज्योतिष्टोमसंबंधे अवगत आनर्थक्य तदंगन्यायेन तदंगभूतेचयने निवेशोपपत्तेः । एव मूषिकासूक्तस्यापि

प्रकरणाज्ज्योतिष्टोमाङ्गभूतयूपैकादशिन्यां निवेशः । तत्र च यद्यप्या रोर्न साक्षाद्विनियोग , तथाप्युपशयेयूपे " सर्वेवा अन्येयूपा पशुमन्तो अथोपशयएवा पशुरि"त्युपक्रम्य द्वेष्याभावे 'आखुस्तेपशुरिति ब्रूयादि" ति मन्त्रविधानेनाखुस्मृति द्वारा लक्षणया तत्सम्बन्ध्युपशयस्तुतिरिति द्रष्टव्यम् ।

ये तु याम्यादिमन्त्रास्तेषां प्रकरणे क्वचमपि निवेशासम्भवनोऽस्य प्र योगा दम्पत्यसाधारणसम्बन्धबोधक प्रमाणाभावेनैव तदप्रसक्तेः लगाया प्रकृतग्रहद्वतैव लक्षणयैव प्रकाश्यते । प्रयोगाभावेन निषिद्धल क्षणानङ्गीकारे तु जपादिमन्त्रवद् याम्यादिमन्त्राणामप्यदृष्टार्थं मुच्चारणं प्रकृतग्रह यागाङ्गत्वेन विधीयते । अस्मिंश्च पक्षे स्मृतिनिरासात्मो गुणवि शेषक प्रकाशनलक्षकत्वाभावेऽपि लक्षणयोच्चारणपरत्व मेव द्रष्टव्यम् । यदि त्वस्मिन् पक्षे ऽदृष्टार्थत्वस्या वश्यकत्वे लक्षणाङ्गीकारे प्रमाणाभाव श्चेत्पत्त, ततो याम्यादिविषये गुणविशेषक गुणसम्बन्धकीर्तनात्मक स्तोत्र शास्त्रविधान मेवा दृष्टार्थ मङ्गीक्रियते । प्रथैतावता सर्वत्रैव तथा प्रसङ्ग , अनुपपत्तेरभावात् । न च याम्यादिमन्त्रेषु तत्तन्मान्त्रव र्णिक देवताङ्गीकारेण तद्देवत्ययागान्तरस्यैव कल्पयितुं शक्यत्वात् किमिति सिद्धाम्यभिमत स्तोत्रशास्त्रादृष्टार्थताङ्गीकरणमिति वाच्यम् , याम्यादि मन्त्रे स्तुतिभागित्वरूप देवतात्व कल्पनेऽप्याधारद्रव्य सम्बन्धाभावे हविर्भागित्वरूप देवतात्वाकल्पनात् तद्देवत्यस्य यागानुमानानुपपत्ते । अतएव जपादिमन्त्रेषु न यागान्तरकल्पनम् । किन्त्वदृष्टार्थत्वमेव । न चान्येषु जपादिमन्त्रेष्व दृष्टार्थत्वेऽप्यत्र ' प्रयाजस्य साधनताप्यायत अतो देवा अवन्तु न इतिजपत अपिवान्यचिष्णवीमि " त्यादौ विष्णु प्रकाशकस्य मन्त्रस्यापाशुयागाङ्गत्वेन विद्धावस्य विहितकर्मणि मान्त्रवर्णिक देवताकल्पकत्वेनोपपत्ते किमित्यदृष्टार्थत्वाङ्गीकरणमिति वाच्य, विधिवाक्यादेवैतस्य मन्त्रस्य यज्ञसाधन लोपनिमित्त वैगुण्यसमा धानार्थत्वे नावगतत्वादप्यान्तराकाङ्क्षानुपपत्ते । अतोऽजपादि मन्त्रवदेवया म्यादिमन्त्राणाम दृष्टार्थत्वाद्धान्तराभिमते स्तुतिरूपत्वमेवाङ्गीकर्तव्यम् ।

यत्तु- मूले "वाचस्तोमे सर्वा ऋचस्सर्वाणि यजूंषि सर्वाणि सामानिपारिप्लवंशसती" ति विहिते शंसे सर्वेषां मन्त्राणां विनियोगाद्ग्राम्यादीनामपि तत्रैवोत्कर्षः । यद्यपि च तत्र दृष्टविधानोपयोगः, तथाप्य दृष्टद्वारैव तदुपपत्ति" रित्युक्तं । तद्वाचस्तोमेप्य दृष्टार्थतावश्यकत्वे ग्राम्यादीनामपि सान्निध्याबाधार्थं प्रकृतग्रहएव अदृष्टार्थत्वस्य न्याय्यत्वादुपेक्षितम् । यदितु वचनेन सान्निध्यबाधान्न प्रकृतग्रहसंबन्ध इत्याशङ्क्येत, ततो दर्शपूर्णमास प्रकरणपठितानां जपादिमन्त्राणामन्येषां च लिंगादिविनियुक्तानां वचनेन लिंगादिबाधापत्तेर्न तदंगत्वसंभवः । अथतु वाक्यस्यापि सामान्यविषयस्य विशेषनिष्ठलिंगादि बाधकत्वायोग इष्येत, ततस्सन्निधावपितुल्यम् । तस्मात्पूर्वोक्त विधयैवार्थवत्वदर्शन व्याख्येयम् ।

॥१७॥सू — अपिवाश्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥२ - १ - २४॥

नैन्द्रस्य प्रगाथस्योत्कर्षसंभवो । साद्दिमतावत्प्राकरणिक एवैन्द्र यागे, तस्याधान्तराधिकारविहित मन्त्रांतराविरोधेन वचनस्य मन्त्रस्यानवकाशात् । नापि क्रतुप्रकरणबहिर्भूते इंद्रयागांतरे, तत्र सामान्य संबन्धबोधक प्रमाणाभावेनोत्कर्षा नुपपत्तेः । इन्द्रशब्देन महेन्द्रस्याग्नि शब्देन च महेंद्र प्रतिपादनतु लक्षणाभियात्वयैव निरस्तम् । अवशिष्यते तावद्यागवेलायां विशेषणयुक्त प्रकाशनेपि मंत्रे विशेष्यमात्र प्रकाशन ना नुपपन्नमिति, तत्रेदंवाच्यं, स्तौतिशंसत्योर्गुणि प्रकारक गुण विशेष्यकबोधानुकूल व्यापारवाचित्वस्य गुणिनिष्ठ गुणतात्पर्यक बोधानुकूल व्यापारवाचित्वस्य वा वक्रकेशोदेवदत्त इत्यादाविवावधारणात्, गुणिप्रकाशनार्थत्वे लक्षणापत्ते स्तौतिशंसति वाक्यस्यैवार्थस्य विधेयत्वावगमात् तस्य च दृष्टार्थत्वासंभवे अदृष्टार्थत्वकल्पनस्य फलमुखत्वेन प्रामाणिकत्वान्ना नुपपत्तिरिति । लोके वक्रकेशो देवदत्त इत्यत्र देवदत्ते वक्रकेशप्रतिपादनएव स्तुति मुद्दिश्यपद्यते, न पुनर्वक्रकेश

ण्वस्य देवदत्तविशेष्यता प्रतिपादने । तेन स्तौतिशब्दाति पदशक्ति पर्यालोचनया प्रकाशनार्थत्वावगमाद् दृष्टार्थत्वांगीकारेणापि गुण प्रकारक गुणिविशेष्यक शाब्द बोधानुकूल व्यापाररूपस्तुति विधापि त्वमेव युक्तम् । नच प्रयाजशेषेणेतिव दृष्टार्थत्वानुरोधेन लक्षणां गीकरणमप्यदोष , प्रकाशनस्य लिंगकल्पश्रुतिबलेनैव प्राप्तिसम्भवे लक्षणयैव साधप्रतिपादनेपि विधिवैयर्थ्यात् । किञ्च दृष्टार्थत्वं विनियोगमन्त्राणामभ्युपगम्यते, स्तुतेर्वा ? नाद्य , मन्त्राणामपि स्तुतिनिष्पादकत्वेन तत्त्व स्यात् । नान्त्य , स्तुतिस्वरूपस्येवहानापत्ते । तस्माच्छ्रुतिश्रुतिसंयोगात्प्रक रण एव स्तौतिशब्दस्तुतिरूप क्रियोत्पत्ति विदध्यातामिति सूत्रार्थः ।

॥१३॥ सू — शब्दपृथक्त्वाच्च ॥ २ - १ - १५ ॥

‘ द्वादशस्तोत्रोऽग्निष्टोमो द्वादश शस्त्रोऽग्निष्टोम ” इति श्रुत द्वाद शत्व न प्रकाशनलक्षणार्थविषय स्यात्ते प्रकाशमाना मन्त्राश्च प्रतिपद देवाभिप्रायेण द्वादशत्वानुपपत्ते । प्रकाशनत्वेनैक्यांगीकारे सुतरात् दनुपपत्तेश्च । अस्मन्मतेतु त्वस्यापि मन्त्राश्च स्तुतिव्यक्तीना भेदे विधि भेदेन विधेयतत्तदनेकस्तुतिव्यक्ति वृत्तिविधेयतावच्छेदकीभूते वैजात्या घायभावा तज्जातिगत द्वादशत्वोपपत्ति । ममतु प्रकाशनस्य सामर्थ्य प्राप्तत्वेना विधेयत्वा सवैजात्यकल्पन प्रमाणमस्ति ।

किञ्चास्मन्मते वैजात्याकल्पनेपि तत्तद्विधिभेदेन विधेयभावना भाव्यस्या नेकस्तुतिजन्या पूर्वस्य भेदावश्यभावा त्तद्गतद्वादशत्वेनापि स्तोत्राणि द्वादशत्वोपपत्ति । प्रकाशन पक्षेतु तस्य दृष्टार्थत्वेना पूर्वा नंगीकारात् दृष्टप्रयोजनस्यस्य च प्रत्यक्षबाधितत्वेन द्वादशत्वानुपपत्ति । अतोद्वादशशब्देन स्तोत्राणां शस्त्राणां च पृथक्त्वाक्षेपादपि न प्रका शनलक्षणा ।

॥१४॥ सू — अनर्थकञ्च तद्वचनम् ॥२ १ १६॥

प्रकाशनार्थत्वपक्षे अग्निष्टुति "आग्नेया ग्रहाभवन्ती" ति वचनेन प्राकृतग्रहानुवादेनाग्निदेवताविधौ कृते प्राकृतदेवताबाधव त्प्रकाशक मन्त्रबाधेनाग्निप्रकाशकमन्त्रांतराणा न्यायादेव प्राप्ते त्वाग्नेयीषुस्तुव तइति वचनवैयर्थ्यापत्ति । नचास्य प्राकृतमंत्रेष्वग्निपदोहप्रसक्तौ मन्त्रान्तरविधानेनार्थवत्त्वमिति वाच्यम्, "पूयतिवाय एतद्वाक्षर यदे नमूहयति तस्मादृचनोहेदि" ति ऋगूहनिषेधा दर्थप्रकाशनरूपकार्य बले नाग्नेयमन्त्रांतरस्यैव प्राप्तिः। अस्मन्मतेतु त्वयपि ग्रहाणामाग्ने याचे कर्मासमवेतगुणिनिष्ठस्यापि गुणस्यकीर्तनेन स्तोत्र शस्त्रजन्यादृष्ट संपत्युपपत्ते प्राकृतानामिव मंत्राणा मुच्चारणे प्रसक्ते तन्निवृत्त्यर्थमाग्ने यीषु स्तुवत इति सार्थकम् ।

॥१५॥ सू - अयथार्थं प्रतीयते ॥ २ १ २७ ॥

सम्पद्धि स्तोत्र शस्त्रचेति श्रुत्या स्तोत्रशस्त्रयो स्सम्बन्ध प्रतीते स्सबधस्यच भेदसाधनाया स्तोत्र शस्त्रयोस्स्वरूपत. फलतोभेदे बैजात्य कल्पनया भेदोवधार्यते । नचासौ प्रकाशनार्थत्वपक्षेसभवति। नच स्तोत्रा दावपि प्रगाणा प्रगाणकृत सभवत्येवेतिवाच्य, स्वरूपत फलतोवा भेदा सभवे प्रगाणाद्यर्थ कृतभेदस्या न्याय्यत्वात् ।

॥१६॥ सू - अभिधानचकर्मवत् ॥ २ - १ २८॥

यदिद स्तोत्रशस्त्रादिरूप सामान्याभिधान यद्याज्यप्रगाणादिरूप विशेषाभिधान तदुभय मप्याराद्रुपकारकत्वपक्षे उपपद्यत, नतु संस्का रकर्मत्वपक्षे, संस्कारस्य संस्कार्यनिरूपणाधीन निरूपणीयस्य संस्का र्येणैवावच्छेदसिद्धौ अवच्छेदकीभूतसज्ञानपेक्षत्वात । एव सत्यपि यद्याराद्रुपकारकत्वग्राहक स्तौति शसति धातुरूप ग्रुतिसयोग स्संस्कारकर्मबाधकोनस्या, तत्रोंलिंगेन संस्कारकर्मत्वस्यैवावधारणात "अग्नुगृह्यापदाभ्य गृह्णाती" ति वदगार्यासायस्यवच्छेदकातरे सत्यावच्छि न्नमेष ज्ञात कृत कर्माभ्युदयकारिभवतीति कल्पनया सज्ञाप्यगाभि येत तत्सेवदस्तोत्यत आराद्रुपकारकत्वमेव युक्तमुत्पश्याम ।

"भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयतेषह्यर्थोविधीयते" इत्य नेनोपक्षिप्तानां विधायकाख्यातानां "तानिद्वैध" मित्यादिना द्वैविध्य मुक्त्वा इदानीं प्रसंगादाख्यातस्यापि क्वचिद्विधायकत्वं नास्तीति प्रतिपाद्यते ।

' नतानशातिनदभाति तस्करोनासामामित्रो व्यधिरादधर्षति । ज्योगिताभिस्सचते गोपतिः स्सह देवांश्च याभिर्यजतेददाति च " इत्या दिमन्त्रे ' यस्योभयँ हविरार्तिमार्छे " दित्यादौ ब्राह्मणेच येयच्छब्दादि समभिव्याहृता आख्यातशब्दा स्ते किं विधायका उतनेतिसंशय । अत्रास्य पूर्वभेदोपयोगित्वंच विचार्यमाणत्वा त्पादाध्यायसंगतीस्पष्टे । प्रासंगिकीत्यनन्तरा ।

तत्रार्छेदित्यादौ अप्रतिबन्धलिङ्श्रवणा द्यजतेददाति चेत्यादा वपि श्रुत्युन्नीत लङ्न्तत्वावधारणा द्यजेतस्वर्गकामइतिवदेव विधाय कत्वमितिप्राप्ते । नच यच्छब्दादिना प्रतिबन्ध यच्छब्देन गोपदा र्थस्य सिद्धत्वद्योतनेपि " यदाग्नेयोष्टाकपाल " इतिवत् भागसाधनत्वेन त्वद्युपपत्ते । अतएव कर्तृसमानाधिकरणस्य यच्छब्दस्यैव प्रतिबन्ध कता न कर्मसमानाधिकरणस्येति सिद्धान्तिनोपि प्रवादः ।

वस्तुतस्तु गुणभूतेन यच्छब्दादिना प्रधानभूतविधिशक्ति प्रतिब न्धस्यान्याय्यत्वा त्कर्तृसमानाधिकरणे यच्छब्देसत्यपि न विधित्व व्याघात । किं च यच्छब्दादिः प्राप्तिद्योतक त्मतिबन्धक वाच्यम् । साप्रतिप्राप्तिः प्रमाणान्तरेणास्ति तदातेनैव प्रतिबन्धसिद्धेः कृतयच्छब्दादिना । यदिनास्ति तदा यच्छब्दसद्भावेपि " यएव वि द्वानग्निंचिनुत " इतिवदर्थवादस्तार्थकत्वादेव विध्युपपत्ते र्नयच्छब्दादे प्रतिबन्धकताभवति ।

वस्तुतस्तु एतस्य मन्त्रस्य गोद्रव्यकानूबन्ध्य पशुपुरोडाशानुनिर्वा प्य दैविकहविर्यागे चरुद्रव्यके गोदेवत्ये याज्यात्वेन विनियुक्तत्वात्तत्र

यदुद्रव्यकाया द्रोद्रव्यकत्वाभावेन तत्राविनियुक्तस्याप्यस्या प्राप्तस्वतन्त्रगो द्रव्यक यागविधायकत्वोपपत्ति । नच साक्षाच्छ्रोषिणिदेविवकाद्वियोगिगो द्रव्यकत्वाप्रामाण्येपि तच्छ्रोषिण्या मनूपन्यासा गोद्रव्यकत्वस्य प्राप्तत्वाद् विधायकत्वोपपत्ति रितिवाच्यम् , एव यथाकथंचि त्प्राप्तिसंभवे प्यभ्या सात्कर्मा तरत्वोपपत्ते । अतश्च यजेतस्वर्गकाम इत्याख्यातघ त्मवगत स्याप्याख्यातस्य विधिरूपैकप्रयोजनकत्वमेव, विधायक शब्दत्वस्याभ यत्र समानत्वादिति सूत्रार्थ ।

अत्र च मन्त्रग्रहण यच्छब्दादि समभिव्याहृताख्यात मात्रोप लक्षणम्, नतु स्वतन्त्रम्, यत्सतायकपित्र्यक्षा मा लभेते" त्यादावपि युक्तप्रसिद्ध्या मन्त्रत्वेपि विधायकत्वांगीकारात । यस्योभयमित्यादौ च ब्राह्मणे यच्छब्दादिसमभिव्याहारे तदनंगीकाराच्च । अतश्च सर्वस्याप्य स्योदाहरणत्वेपि प्रायशो यच्छब्दादि समभिव्याहारस्य तेष्वेवसत्त्वात्सूत्र मन्त्रग्रहणम् ।

सिद्धान्तमाह-

॥३॥सू — अविरा प्रयोग सामर्थ्यां मन्त्रोभिधानवाचीस्यात् ॥२ १ ३४॥

नैतेविधायका यजते 'इत्यादीनामुद्भेद् साधारण्येन विध्यर्थक त्वा निश्चयात । नच स्तुत्यात्वनिश्चय विधेरभावे स्तुतेरेवा निश्चयेन तस्या अतन्निश्चायकत्वात । नच यत्सतायकपित्र्यज्ञानालभेते" त्यादिनंदप्रामाण्यत्वेनैव तन्निश्चायक, गोद्रव्यकस्य यागदानादेरनुवादादि रूपस्य तदन्यस्यथा बहुश प्रामाण्येन तदसिद्धे । अतएव न विधि पुनश्च गणरूपाद्भ्यासा कर्मान्तरत्व शक्य विधित्वस्यैवा निश्चयेनाभ्यासस्वरूपा भावात । विध्यभावेपि पुनश्श्रुतिमात्राद्भेदस्तु पुनःश्रुतेस्स्मरणार्थत्वेनाप्युप पत्ते रनन्यपरत्वाभावादयुक्त । किंच यद्यप्यत्रविधायका लिङादिरश्रोप्यत तथापि यच्छब्दादिना विधिशक्तिप्रतिबन्धा ग्राह्य विधायकत्वोपपत्ति । तथाहि - यच्छब्द स्तावत्स्वसमभिव्याहृतार्थस्य सिद्धतांद्योतयन् प्राप्ति

मपेक्षते । अस्ति चात्रसा । अतो गोद्रव्यकयागदानादेरनूद्यमानस्या ज्ञात ज्ञापनैक स्वभावविधिविषयत्वायोग स्स्पष्ट एव । नच यच्छब्दस्य स्वार्थमात्रे सिद्धताद्योतकत्वात् द्रोस्वरूपानुवादेपि तस्य साधनत्वेनाविध्यु पपत्ति रितिवाच्यम्, यः पाकंकरोति सभुङ्क्तइत्यादौ यत्तच्छब्दयो स्स्वसमभिव्याहृतमात्रे सिद्धत्वद्योतकत्वाव्युत्पत्तेः । अतएव याभिर्यजमानपाश्च गाद्ददाति तानवगच्छति, नच तस्करोदभ्नोति, नचएनाः अमित्रोऽय धिराद्धर्षति व्यथया अभिभवति, गोस्वामीच ताभिस्सह चिरमद्धतीति यच्छब्देन समभिव्याहृते गोद्रव्यकयागदानादावपि सिद्धताप्रतीतेन विधेयत्वोपपत्तिः । यच्छब्दस्य समभिव्याहृतवृत्ति सिद्धताद्योतकत्वा देवस्य यत्रकर्तृसमभिव्याहारस्तत्र कृत्याश्रयरूपकर्तृत्वस्य सिद्धता प्रतीतौ कृतेरपि तत्प्रतीते विधेयत्वानुपपत्त्या विधिशक्त्यनुपपत्तिः । यत्र तु कर्ममात्रसमभिव्याहृतो यच्छब्द स्तच्छब्दसमभिव्याहृतश्च विधिं स्तत्रसत्यपि कर्मस्वरूपस्यानुवादे कर्तव्यत्वेन विधानोपपत्तेः न विधिशक्तेः प्रतिबंधकता यच्छब्दस्य । प्रकृतेतु विधेयं यच्छब्देनैव स मभिव्याहारादयुक्ता प्रतिबंधकतेति विशेषः । एव सत्यपि यदिकश्चि चिद्व्याकोचयमाने प्राप्तिर्नसंभाव्येत ततो यदाग्नेयोऽष्टाकपाल इति यच च्छब्दस्य स्वार्थमात्रसिद्धत्वद्योतकता मगीकृत्य विधेः विधायकत्वोपपत्ते र्नशक्तिः प्रतिबध्येत । नात्वेतदस्ति, गोद्रव्यकस्य यागदानादेर्बहुशः प्राप्त्यभावात् ।

यत्तु- सत्यपि यच्छब्दस्य विधिविरोधित्वे प्रधानभूतत्वा द्विध्य नुग्रह एवन्याय्य., न गुणभूतयच्छब्दानुग्रह, इत्युक्तम् । तदुच्चैर्ऋचा क्रियत इत्यादौ प्रधानभूतस्या प्युपसंहाररूपस्य विधे रुपक्रमस्थेन गुणभू तेनाप्यर्थवादेन बाधस्य वक्ष्यमाणत्वा दकिंचित्करम् ।

वस्तुतस्तु- विधिवदेव यच्छब्दस्यापि प्रधानभूत भावनान्वयित्वा द्यविधि प्रतिवस्य गुणत्वम् । यदि परं पदांतरत्वा तदपेक्षया विप्र कर्षशंस्येत, ततः "ऐन्द्रपञ्चशराव" मित्यनेन वाक्यभेदापत्त हेतुहेतुम तोरित्यनुशासन वैयर्थ्यापत्तेश्च विधिशक्तिप्रतिबंधोनुसंधेयः ।

न्यूह प्रवरनामधेयानि किं मन्त्रा उतनेतिविचारः। केचित्तु मन्त्रब्राह्मणात्मकवेदस्य द्वैराश्ये निरूपिते प्रसंगात्प्रत्यक्षपठितएववेदे द्वैराश्यंनत्वनुमित इतिवदनूहादीनां द्वैराश्यबहिर्भावेन प्रतिपादयन्तइत्याहुः। तेषामनाम्नातेष्वमन्त्रत्वमितिवद् ब्राह्मण त्वमित्यपि सूत्रापत्तेः उपेक्षैवयुक्ता।

तत्रप्रयोगकाले अर्थाभिधायकस्यैव मन्त्रपदवाच्यत्वादूहादीनां चार्थाभिधायकत्वस्य स्पष्टत्वात् मंत्रपदएकवाक्यत्वाच्चैषां मन्त्रत्वम्। अन्यथाह्य मन्त्रैकवाक्यतापन्नानां मन्त्राक्षराणामपि श्लोकैकवाक्यतापन्न मन्त्राक्षरवद् मन्त्रत्वापत्तिः। ऊहेतु मन्त्रान्तर्गताग्निपदत्यागादप्यवशिष्टाक्षरेषु सा। अस्मन्मतेतु मन्त्रभूताग्नि पदयुक्तानामिव मंत्रभूतसूर्यादि पदयुक्तानामपि मंत्रत्वोपपत्तेर्नायंदोष। तस्मादूहादीनामपि मन्त्रत्वमिति प्राप्तेऽभिधीयते -

प्रयुक्तन्यायाप्रतिपादिता अव्याप्त्यादिदूषणवशेनैतल्लक्षणायोगस्य स्पष्टत्वा दभियुक्तप्रसिद्धिविषयत्वस्यैव तल्लक्षणत्वं वाच्यम्। अतश्चोहादीनां तदभावेन मन्त्रत्वायोगस्स्पष्टएव। नचैतावता तदेकवाक्यतापन्नमन्त्राक्षराणाममन्त्रत्वापत्तिः, मन्त्रत्वप्रत्यभिज्ञानस्य दृढत्वात्। अतएव कर्मकालेऽप्यध्यान्त्य-प्लुतिकरणेऽपि न मन्त्रत्वहानिः। यत्तु श्लोकाद्येकवाक्यतापन्न द्विषमन्त्राक्षरेषु न मन्त्रत्वप्रसिद्धिरभियुक्तानां तत्र मन्त्रत्वे प्रमाणाभाव स्स्पष्टएव। अतश्चोहादि ष्वभियुक्तप्रसिद्ध्यभावेन अमन्त्रत्वेऽपि तदेकवाक्यतापन्नानामक्षरान्तराणां तदभावात् मन्त्रत्वोपपत्तिः। एवश्चैवं कुर्वीद्भिरित्यादौ इरापदस्य मन्त्रत्वप्रसिद्ध्यभावेन मन्त्रत्वेऽपि तदेकवाक्यतापन्नाक्षरान्तराणां मन्त्रत्वोपपत्तिः। इरापदेमन्त्रत्वप्रसिद्धिस्तु अध्ययनकाले पारायणादौ चोपयुज्यतइतिद्रष्टव्यम्।

यत्तु वार्तिके इरापदस्य ऐरमितिविधिवाक्ये तद्धितान्तर्गतत्वे नाम्नातत्वादस्यैव मन्त्रत्वमित्युक्तं, तद्ब्राह्मणे समाम्नातस्यापि मन्त्रप्रसिद्ध्यविषयत्वेन मन्त्रत्वायोगात् वचनान्तायक्षपिशङ्गाना छमेतेत्यादिवन्मन्त्रव। न्वेदपाठाभ्युपगमेऽपिवा ऐरपदस्यैव पठितत्वेन मन्त्रत्वापत्ते स्तद्विधेयस्येरापदस्यवस्तुतः पाठाभावेन मन्त्रत्वानुपपत्ते रतिशयार्थमितिद्रष्टव्यं।

युक्तार्थवशेन पादव्यवस्था । क्वचित्तु "अग्निःपूर्वेभिर्ऋषिभि" रित्यादौ लघु गुर्वक्षरसाम्याल्पवृत्तवशेन,"अग्निमीळे"इत्यादौ चाक्षरसङ्ख्यानियमलक्षण छन्दोवशेन,"समुद्रा मिन्द्रंनरेजमान"मित्यादौ चाल्पवैषम्येणैव, पादव्यवस्था। अतएव सूत्रे अर्थवशग्रहणं वृत्तवशादेरुपलक्षणार्थं । तदपि च न लक्षणान्तर्गतं, पादव्यवस्थावन्मन्त्रस्व रूपस्यैव लक्षणस्या नतिप्रसक्ततरत्वात् ।

## इति ऋग्लक्षणाधिकरणम् ॥ १० ॥

---

## अथ सामलक्षणााधिकरणम् ।

---

॥१॥ सू - गीतिषुसामाख्या ॥ २-१-३६ ॥

अथ तेषामित्यनुवृत्तस्य मन्त्रगतगीतित्वस्य सामशब्दार्थतोच्यते। अतश्च नलौकिकगीतावतिप्रसंगः । अभियुक्तव्यवहारात्स्यापि शब्दार्थत्वावधारणं । नचैव वैदिकगीतिविशिष्टमन्त्रेऽभियुक्तप्रयोगा न्मन्त्रस्यापि वाच्यतापत्तिः, मन्त्राणां व्यक्तिन्यायेन लक्षणयापि भानोपपत्तौ अतिरिक्तशक्तिकल्पने प्रमाणाभावात् । विस्तरेणचैतदसमे उपपादयिष्यामः । नचैवं पौनरुक्त्यम् , सामशब्दस्य गीतिमात्रवाचित्वेतद्विशिष्टमन्त्रवाचित्वे वा उभयथा ऋग्यजुर्भ्यां विवेकोपपत्तेः गीतिमात्रवाचित्वस्य इहानुपयोगेन अवाच्यत्वात् सप्तमएव ऋगन्तरे अतिदेशासिद्ध्यर्थं अवश्यवाच्यत्वात् । इह सप्तमसिद्धस्यैव गीतिमात्रवाचित्वस्य अनागतावेक्षणेन शिष्यहितार्थं कथनेन पौनरुक्त्यानापत्तेः । यथाच तस्य नाक्षाद्यधिकरणेन पौनरुक्त्य तथा सप्तमएव उपपादयिष्याम. ।.

यत्तु नवमे पुनर्गीतिमात्रवाचित्वकथनं तदुत्तरविवक्षार्थं स्मरणार्थमिति तत्रैव वक्ष्यते ।

## इति सामलक्षणाधिकरणम् ॥११॥

---

## अथ यजुर्लक्षणाधिकरणम् ।

---

॥१॥ सू - शेषेयजुश्शब्दः ॥ २-१-३० ॥

ऋक्सामभिन्नं यावन्निर्दिष्टाक्षरमन्त्रजातं तद्यजुः । स्तोभाक्षराणामपि यजुष्ट्वप्राप्तिरिष्टापत्तिः ।

## इति यजुर्लक्षणाधिकरणम् ॥ १२ ॥

---

## अथ निगदानांयजुष्ट्वाधिकरणम् ।

---

॥१॥ सू - निगदोवा चतुर्थंस्या द्धर्मविशेषात् ॥ २-१-३१ ॥

शेषे यजुश्शब्द इत्येतदाक्षेपेणेदमारभ्यते । सन्ति निगदानाम सा यज्ञाः परसम्बोधनार्थामन्त्राः अग्नीदग्नीन्विहरेत्यादयः । ते किं यजूंष्येव, उतभिन्नाइतिविचारः । तत्र निगदानां यजुष्ट्वे "उपांशु यजुषे"ति वचनेनोपांशुत्वप्राप्तिः " उच्चै निगदेने " ति वाक्यविहितोच्चैस्त्वानुपपत्तिः । नच विशेषविहितेनसामान्यविहितस्यबाधः, विशेषविधेः स्वविषयवृत्तिभेद बोधनेनाप्युपपत्तौ सामान्यस्यापि वाक्यस्य संकोचप्रमाणाभावात् । नच परप्रत्यायनफलकत्वानुरोधेनोपांशुत्वविधेः संकोचादुच्चैर्निगदेनापस्यात्

चादृशत्वोपपत्ते र्नभेदबोधकतेतिवाच्यं, मन्त्रगतलिङ्गप्रमाणकरणप्राप्तनरूपकार्यानुरोधेन वाक्यस्यापि ब्राह्मणगतस्य सङ्कोचायोगात् । "नम. प्रधक्रदेवेज्यामन्त्रिष्य" इत्यादीना परसम्बोधनार्थत्वस्याप्यभावाच्च । सत्यपि परसम्बोधनार्थत्वे उपांशुत्वव्यतिरिक्तमन्त्रादिस्वराणामपि पक्षे प्राप्तत्वादुच्चैस्त्वानुवादानुपपत्तेश्च । अतश्चोच्चैर्निगदेनेत्यस्य विधित्वावश्यम्भावाद्भेदबोधनादपि तदुपपत्ते र्नसामान्यस्यापिवाक्यस्य सङ्कोचकल्पनावसर । तस्मादर्थान्तर 'निगदा' । सूत्रस्पष्टम् ।

॥ १ ॥ सू – व्यपदेशाच्च ॥ २-१-३१॥

इमनिगदा. इमानियजूंषीति सञ्ज्ञाभेदादपि ज्योतिरादियद्भेदकतोपपत्तेरर्थान्तर । एवञ्च 'मन्त्रपरम्परय निगदभूतोभवति तस्माद्यजु" रिति सुब्रह्मण्याप्रकरणस्थे निगदस्य यजुष्ट्वसङ्कीर्तनयोगेन यागसाधनत्वमात्रपरम्, सुब्रह्मण्यमात्रस्यैववा यजुष्ट्वज्ञापकमिति द्रष्टव्यम् ।

॥३॥ सू – यजूंषिवानद्रूपत्वात् ॥ २-१-३३ ॥

नैतदेव. "अहेबुध्निये" ति मन्त्रे मन्त्रान्तरभेदाना मृगादिमन्त्राणांमध्ये तन्नामैवानुकीर्तनेन निगदस्य भेदेना नुकीर्तनात, मन्त्रएव स्वयं निगदभूतो भवतीत्यत्र ऋक्सामभिन्नमन्त्रस्य सुब्रह्मण्यानिगदेयजुष्ट्वसाधकत्वेनोक्तस्य निगदान्तरेष्वपि सत्त्वाच्च । नचायमौगिको यजुश्शब्द', जपादिसाधनमन्त्रेऽपि प्रश्लिष्टपठिते यजुश्शब्दप्रयोगेण तस्यरूढत्वावगमा यौगिकार्थबोधकत्वानुपपत्ते. । तस्माद्यजूरूपत्वादभिन्नानांयजुष्ट्वमेव । यत्तु विरुद्धधर्मकत्वा द्भेदइति तत्रोत्तरम् –

॥४॥ सू - वचनाद्धर्मविशेष ॥२ १ ३४॥

'वेदोवा प्रायदर्शनादि" त्यत्र तृतीये वेदोपक्रमानुरोधेनोच्चैस्त्वादेः ऋग्वेदादि विहितकर्माङ्ग मन्त्रमात्राङ्गत्वस्य स्थापयिष्यमाणत्वेन भवन्मतेप्युच्चै र्निगदेनेत्यस्यो पांशुयजुषेति वाक्यसङ्कोचस्यावश्यं भावा

द्भेदानुमापकत्वानुपपत्तेः, सत्यपि चोच्चैस्त्वादे ऋगादिधर्मत्वे परप्रत्यायन रूपदृष्टार्थानुरोधेनोपांशुत्वानुपपत्तेः उपांशुयजुषेत्यस्य निगदाविषयत्वानुपपत्तेः सत्यपि निगदानां यजुष्ट्वे उच्चैर्निगदेनेत्यस्य निगदेषु पक्षप्राप्तमन्द्रादिव्यावर्तनफलकोच्चैस्त्वनियामकत्वोपपत्तेर्भेदानुमापकत्वायोगाच्च । नच लैङ्गिकं परप्रत्यायनार्थत्वस्य ब्राह्मणवाक्यगतेन वाक्यप्रमाणकेनापि बाध्यताम्, लैङ्गिकस्यापि प्रधानभूतस्य परप्रत्यायनस्याङ्गभूतेनोपांशुत्वेनबाधायोगात् । उक्तं ह्युत्तरप्रमाणबलाबलापेक्षया प्रमेयबलाबलं ज्याय इति । अतश्च लिङ्गेनैवोपांशु यजुर्वाक्यस्य संकोचितत्वान्नोच्चैर्निगदेनेत्यस्य सफलत्वकता । किंच नावश्यं लिङ्गस्यैव विधिसंकोचे व्यापारः अपितु विधिवाक्यस्यापि स्वनिष्ठगौरवपरिहारार्थं स । तथाहि- उपांशुयजुषेत्यस्य निगदेष्वप्यन्तःप्राप्तोपांशुता विधायित्वेन पूर्वविधित्वापत्तेः सतस्य वा दृष्टादेश्यकत्वेन गौरवापत्तिः । पुनश्च निगदभिन्नमन्त्रान्तरे पक्षप्राप्तोपांशुतानियामकत्वेन नियमविधित्वाद्वैरूप्यम् । अतो निगदातिरिक्तेष्वेव दृष्टपदार्थोद्देश्यकतालाघवार्थं स्वरविशेषनियामकत्वाङ्गीकरणात्स्वयमपि विधिस्स्वसंकोचेऽप्यपेक्षते । अतश्चोपांशुत्वाविषयीभूतेषु निगदेषु पुनर्निगदेनेत्यनेन स्वरानियमेनानुपपन्न ।

यत्तु -मूले उच्चैर्निगदेनेत्यस्य परप्रत्यायनरूपकार्यबलप्राप्तोच्चैस्त्वानुवादकत्वं सुपांशुत्वविधिप्रशंसाफलकमङ्गीकृतम्, तदतिशयार्थं, मन्द्रादिस्वरान्तराणामपि पक्षे प्राप्तत्वेन नियमवदनुवादायोगात् । परप्रत्यायनरूपकार्यरहितानामपि निगदानां सत्त्वेन तेषूपांशुत्वस्यापि पक्षप्राप्त्या सुतरां तदयोगाच्च । नचैवं सुपांशुयजुषेत्यत्र वस्तुतो वेदोपक्रमाधिकरणन्यायेन वेदलक्षणावन्निगदपदेऽपि यजुर्वेदलक्षणापत्तेर्यजुर्वेदविहितकर्माङ्गभूतमन्त्रेषु उच्चैस्त्वोपांशुत्वविकल्पापत्तिः, वेदोपक्रमस्यैकत्रैव लक्षणातात्पर्यग्राहकत्वेनोपपत्त्या उभयत्र तदङ्गीकारे प्रमाणाभावात् । नच नियामकाभावः, 'यायो यजुर्वेद" इति यजुःपदसमभिव्याहृत वेदपदोपक्रमस्य यजुः पदलक्षणायामेव तात्पर्यग्राहकत्वेन तदसिद्धेः ।

यावति पदसमूहे लोके वाक्यत्वप्रसिद्धिः तावत्येव यजुष्ट्वं न तु वाक्य समूहे, तस्यैकार्थं प्रतिपादकत्वाभावेन विनियोगानर्हत्वात्। लोकेऽपि यत्रै कार्थत्वात् विभज्यमाने साकांक्षत्वञ्च तावत्येव वाक्यत्वप्रसिद्धेः ताव त्येव यजुष्ट्वमित्यवगम्यते ।

ननु किमिदमर्थैकत्वम्? न तावत्पदार्थैकत्वं, तेषां गामानयेत्यादि वाक्ये नैकत्वात् । नापि वाक्यार्थैकत्वं ? तस्यापि संसर्गरूपत्वेन प्रतिपदार्थं भेदात् । नापि प्रयोजनैकत्वं, तथाहि सोऽपि रूपप्रयोजनैकत्वं विवक्षित तत्तस्मीयं चरुमित्यादौ द्रव्यदेवते प्रतिपाद्य, याग च प्रतिफलमित्यनेकार्थत्वात् दर्थैकत्वानापत्तिः, " दर्शपौ र्णमासाभ्यां" इत्यादौ चरुत्वाश्रय पुरुष विशेष्यप्रयोजनैकत्वं? तदा "दर्श पूर्णमासाभ्यां स्वर्गकामो यजेत " इत्यादावाग्नेयादिभावनानां मुख्यविशेष्य णां भिन्नत्वात् तदेकत्वानापत्तिः। अथ मुख्यविशेष्यप्रतिपादकशब्दैकत्वं, तर्हि व्रीहिभिर्यजेत वाक्ययोः भगो वा विभजत्वित्यादौ च तत्प्रतिपादकशब्दभेदे नार्थैकत्वानापत्तेः विभज्यमानसाकांक्षत्वरूपविशेषणोपादानवैयर्थ्यमिति चेत्,-भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यमर्थैकत्वं। अस्ति च गामान येत्यादौ तत्, आनयनभावनाया मुख्यविशेष्यभूताया एकत्वात्। अस्ति चेदं द र्शपूर्णमासवाक्येऽपि, अनेकासामाग्नेयादिभावनानामेकेन प्रत्ययेनोपादानात् भिन्नप्रतीतिविषयत्वासिद्धेः। व्रीहियवादिवाक्ययोः भगो वा विभजत्वित्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्यस्य यागविभाग भाव नादेरेकत्वात् दर्थैकत्वोपपत्तिः। न चात्र 'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्प तां" मित्यत्र कॢप्तिभेदे 'कॢप्तीर्वाचयती"ति बहुवचनं द्विभागभेदे प्रमाणमस्ति, यतोऽर्थभेदः शक्यत । अतस्तत्रापि व्रीहियववाक्ययोः " भगो वा विभजतु अर्यमा वा विभजतु पूषा वा विभजतु " इत्यादौ चोक्तविधार्थै कत्वे विभज्यमानसाकांक्षत्वाभावाद्वाक्यभेदसिद्धिः । विभज्यमानसाका ङ्क्षत्वं चान्वीयमानयोः पदार्थयोरनन्वये अनिवृत्ताकांक्षत्वं। यथा गामा नयेत्यत्र गोशब्दस्य । न च भगो वा इत्यत्रार्यमा वा इत्यस्यानन्वये साका

साधमस्ति, स्ववाक्योपात्त विभजत्यन्वयेनैव निराकांक्षत्वात् ।
अतोऽस्यैवाविभज्यमानसाकांक्षत्व विशेषणसार्थक्यम् । अथैकार्थविशेषणसा
र्थक्यन्तु 'स्योनन्ते सदनं करोमि' इत्यस्यापि तस्मिन् सीदेत्यनेनानन्वये तच्छ
ब्दस्य साकांक्षत्वेन विभज्यमानसाकांक्षत्वा देकवाक्यत्वापत्त्या द्रष्टव्यम्,
तत्र विभज्यमानसाकांक्षत्वे प्यर्थैकत्वाभावात् । नहि सदनकरण प्रतिष्ठा
पन भावनयो रेकपदोपादानमस्ति, येनैकमर्थोऽतिविशिष्टत्व माश्रयेत ।
सदनकरणभावनायाः प्रतिष्ठापनभावनाया प्रकारत्वाङ्गीकारेण मुख्यवि
शेष्य भेदराहित्य साकांक्षत्वात्तु तस्यापि मुख्यविशेष्यता प्रतीतेः
तच्छब्दस्य च वाक्यान्तरोपात्त सदनकरणप्रकाशकत्वेनाप्युपपत्ते
र्वाक्येनलिङ्गबाधायोगादयुक्ता । अतोऽर्थैकत्वाभावादेव तत्रैकवाक्य
त्वाभावः । देवस्यत्वेत्यादिवाक्ये तूभय सत्वा युक्त निर्वपामीत्यस्यै
कवाक्यत्वम् । अतश्च तावद्यजुष्ट्वमपि, तावत पदार्थप्रकाशकत्वेन
यागसाधनत्वात् । न च यागसाधनत्वमात्रेण यजुष्ट्वम्, ऋच्यपि तदा
पत्ते, जपादिसाधनेषु तदनापत्तेश्च, किन्तु मन्त्रत्वावान्तर धर्मरूप
मखण्ड तद्दिशङ्गीकर्तव्य, तस्य च वेदत्ववत् सर्वमन्त्रेषु व्यासक्ति
कल्पनेऽपि यजुरवयवस्यैव विनियोगेन प्रकाशकत्वापत्ते र्न यजुष्ट्वस्य
पर्याप्तिकल्पने प्रमाण मस्तीतिवाच्यम्,- "मन्त्र एव यत्वेष निगद
भूतो भवति तस्माद्यजु" रित्यादौ वाक्येऽपि यजुःशब्दप्रयोगा स्त
र्यान्ति युक्तितोऽपपत्ते । अन्यथाहि सर्वेषु मन्त्रवाक्येषु व्यासक्ते यजु
ष्ट्वे एकस्मिन्निगदे यजुरवयवत्वा प्यजुःशब्दप्रयोगोपपत्ति । अतो
वाक्य पर्याप्त यजुष्ट्वम् । एव मन्त्रत्वमपि वाक्ये मन्त्रशब्दप्रयोगात्पर्या
प्तमेव । वेदत्वन्तु एकस्मिन्वाक्ये अधीते वेदाधीत इति व्यवहारा
भावा द्व्यासज्यवृत्त्येवेति वक्ष्यते । नचैव मन्त्रत्व यजुष्ट्वयो र्वाक्यमात्रवृ
त्तित्वे किंचिन्न्यूनेऽपि सम्पिन्नमन्त्रत्वापत्तिः, गार्गेटुनिजातिवत्पाणेषा
अप्रेगोत्वप्रत्यभिज्ञानबलेन गौरवत्वादिहापि तदङ्गीकारे बाधकाभावात् ।
अतएव यत्र नमापभिन्ना, यथा स्योनाधेस्वावाक्यनारम्भ टिरमभास

रेषु, तत्र नैव मन्त्रत्व मित्युक्तं प्राक् । तस्मा त्सिद्धं वाक्यमात्रवृत्ति
यजुष्ट्वमिति ।

सुतन्तु यद्विभज्यमान साकांक्षं पदजातं तदर्थैकार्थे स
त्येकं वाक्यमित्येव लोकेप्रसिद्धं, अतस्तादृशवाक्यवृत्त्येव यजुष्ट्वमि
त्येवमध्याहारेण व्याख्येयं । ननु यथा श्रुतमेव वाक्यलक्षणपरं मेक
वाक्यत्वलक्षणपरं वा, पूर्वोक्तमन्त्रप्रस्तावेनासङ्गतत्वापत्तेः । अतोमन्त्राणां
तद्विभागेपूर्वं निरूपिते अधुना तदवान्तरभेदस्य यजुषःपरिमाण निरूप्य
तइति द्रष्टव्य । अतएव ऋक्सामरूपयो स्तदवान्तरभेदयो रप्ये
वसिद्धपरिमाणत्वा त्तदनिरूपणेपि नक्षतिः ।

## इति यजुःपरिमाणाधिकरणम् ॥ १४ ॥

## अथ वाक्यभेदाधिकरणम् ।

॥१॥ सू — समेषुवाक्यभेदःस्यात् ॥ २ - १ - ४० ॥

तदेवं विभज्यमानसाकांक्षत्वविशिष्टार्थैकत्वरूपवाक्यैकत्वेन यजुः
परिमाणे चिन्तिते, अधुना विभज्यमानसाकांक्षत्वादिकमेव कियत्सु पदेषु
व्यासक्तमिति विचार्यते । दर्शपूर्णमासयोः "इषेत्वोर्जे त्वावायवस्थ" इत्यादि
समाम्नायते । तत्रवायवस्थेत्यादेस्तावद्वत्सापाकरणे विनियुक्तस्य स्थेति
क्रियापदसत्त्वा द्वायुवच्छीघ्रगामिनो भवतमातृसमीपंपुनरागामिनो भवते
त्युक्तेर्वत्सापाकरणप्रतीतेर्देवस्यत्वेति मंत्रभेदस्य सुज्ञान परिमाण, 'इषेत्वे'
त्यादि त्वेकवचनान्तस्य शाखाच्छेदनादौ विनियुक्तस्य वायवस्थेत्यनेनैक
वाक्यत्वासंभवात्ततोभिन्नत्वेनावगतस्यापि स्ववाक्ये आख्यातपदाश्रवणा
त्प्रस्तुतान परिमाणमिति चिन्त्यते कियदेकं यजुरिति । तथा वाजपेये पठितं

"आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां अपानो यज्ञेन कल्पता" मित्यादि । तत्रापि कियदेकं यजुरिति चिन्त्यते । तदर्थं चार्थैकत्व विभज्यमानसाकांक्षत्वे कियत्सु पर्याप्ते इत्यपि चिन्तनीयं ।

तत्रेषेत्वेत्यादावाख्यातपदा श्रवणेपि साकांक्षत्वा त्तावदवश्यं कल्पनीयं । न च साकांक्षार्थज्ञानस्यापि मन्त्रजन्यस्यादृष्टार्थत्वेन जपादिवदुपपत्ते नाध्याहारावश्यकत्वमिति वाच्यं, "इषेत्वेति शाखांछिनत्ति ऊर्जेत्वेत्युन्मार्ष्टी"तीतिकरणेन च्छेदनाद्यंगत्वेन मन्त्रविनियोगा न्मन्त्र इतिकरणावगतकरणत्वस्य चाभिधानं विनानुपपत्तेः छेदनादिप्रकाशकत्वावगमेन छिनद्मीत्यादि पदाध्याहारावश्यकत्वप्रतीतेः । अतश्चाश्रूयमाणस्यैकस्यैवाख्यातस्य कल्पनोपपत्तौ अनेककल्पने प्रमाणाभावा दिषेत्वोर्जेत्वेति पदचतुष्टयाते एकमेव तदध्याह्रियते । यद्यपि च विनियोगभेदात्पूर्वपक्षेपि छिनद्मित्वन्मार्ज्मीत्याद्याख्यातद्वयकल्पनमावश्यकं, तथापीषेत्वेत्यस्य सामर्थ्या त्प्राकरणिकसर्वयोग्यक्रियार्थत्वस्यावगतस्या न्यक्रियाविषये बाधे त्वन्मार्जनविषयेपि बाधे प्रमाणाभावेन समस्तस्यैवैकत्वविनियोगावगते रेकवाक्यत्वोपपत्तिः । नन्वोर्जेत्वोन्मार्ष्टीत्यस्यैव पदद्वयमन्त्र विनियोजकस्य ब्राह्मणवाक्यस्य सामर्थ्यप्राप्तेषेत्वेति पदद्वयबाधकत्वं, तस्य प्रतीकग्रहणेनापि समस्तविनियोजकत्वोपपत्तौ सामर्थ्यबाधे प्रमाणाभावात । नन्वेषेत्वेति शाखां छिनत्तीत्यस्यापि प्रतीकेन समस्तविनियोजकत्वोपपत्तौ यत्पूर्जेत्वेत्यस्य कथम्प्रथमप्रतीकेन समस्तविनियोजकत्वमिति वाच्यम्, "आनः प्राण एतु परावत आंतरिक्षाद्दिवस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वे"ति मन्त्रस्य "प्राणाय त्वेति हिरण्यमभिव्यनीति" त्यनेनांतिमप्रतीकेनापि विनियोगस्य संकर्षे वक्ष्यमाणत्वात, तन्न्यायेनाव मध्यमप्रतीकेनापि समस्तविनियोगोपपत्तेः । अतश्च समस्तस्यैकाख्यातकल्पकत्वेनैकार्थत्वा त्तस्मिंश्च सर्वेषामनन्वये अनिवृत्ताकांक्षत्वेन विभज्यमानसाकांक्षत्वादेकवाक्यतालाभेन यजुष्ट्वोपपत्तिः । कल्पतामादिमन्त्रेषु यद्यपि कल्पतां

मित्याम्नातश्रुतम्, तथापि विभागवत्क्लृप्तिभेदे प्रमाणाभावेनैकार्थत्वोपपत्तेः । न वा पुरोडाशादिद्वारकभेदादेव क्लृप्तिभेदः, प्रयाजादिष्वेतेषां स्वतोऽसमवेतत्वेन स्वविभागोपयोगितया एकस्यामपि क्रियाया निवेशसंभवेन भेदकत्वात् । नच क्लृप्तीर्वाचयतीति संख्यया क्लृप्तिभेदः, वाचयते दक्षिणानुक्रमयाजकव्यापारत्वाविशेषेण तदन्तर्गतवचनकर्मतया अर्थरूपायाः क्लृप्तेरन्वयायोगेन क्लृप्तिपदस्य कल्पतामितिपदकसमापावगते स्वसंख्यायास्तन्निष्ठत्वेन क्लृप्तिरूपार्थनिष्ठत्वाभावात्तद्भेदकत्वानुपपत्तेः । नचैवमेकार्थत्वोपपत्तावपि विभागवदेव विभज्यमान साकांक्षत्वाभावात् नैकवाक्यत्वोपपत्तिः, एतेषां मैत्राह्वानार्थत्वेन दृष्टार्थानामपि क्लृप्तीर्वाचयतीत्यनेन समुच्चयावगमादेकस्मिन् मैत्राह्वानार्थं क्लृप्तिप्रकाशनरूपैकार्थे अनेकेषामपि कल्पतामितिपदानां परस्परसाहित्यावगमेन विभागेऽप्यनुवृत्ताकांक्षत्वोपपत्तेः । विभागपक्षे तु मंत्राणां दृष्टार्थत्वेन विकल्पात् साहित्यानवगते विभागेऽपि परस्परानाकांक्षत्वान्नैकवाक्यत्वोपपत्तिः । अतश्च क्लृप्तिप्रकाशनरूपैकार्थविशिष्टविभज्यमानसाकांक्षत्वरूपतद्वाक्यैकत्वलक्षणया एक यजुरेकत्वमिति ।

केचित्तु क्लृप्तिमन्त्रे वास्तवमेकवाक्यत्वं स्वरूपाद्यपि तु मन्त्रमर्थाः- वदाहरणद्वयेऽपि प्रयाजानामदृष्टार्थत्वमंगीकृत्य अदृष्टस्यैकस्यैव कल्पनयोपपत्तेः, अनेककल्पनायोगात् दृष्टरूपैकार्थत्वं परिकल्प्य तस्मिन् विभज्यमानसाकांक्षत्वादेकवाक्यत्वं कथयन्तः "यद्यपि च पूर्वसूत्रेऽस्तव प्रयोजनैकत्वेनैकार्थत्वं विवक्षितम्, किन्तु मुख्यविशेष्यभूतशाब्दप्रयोजनैकत्वेनैवतत्, तथाप्यज्ञाताभिप्रायस्यैवायं पूर्वपक्षः" इत्याहुः तदास्तयेव वाक्यद्वयस्यापि क्लृप्तिमन्त्रे उपपादितत्वात्, अदृष्टार्थत्वांगीकारे च प्रमाणाभावात्, तदेकत्वस्य च विनियोगभेदेन शब्दोपात्तप्रकारकत्वेन च कल्पनानुपपत्तेः, कल्पितेऽपि तस्मिन्नितरपदार्थानामन्वयानुपपत्तेः, अदृष्टत्वान्वयांगीकारेऽपि च साकांक्षत्वाभावादेकवाक्यत्वकल्पनानुपपत्तेः, ईदृशैकवाक्यत्वस्य पूर्वसूत्रे ऽनभिप्रेतत्वाच्चोपेक्षितम् ।

तस्मात्पूर्वोक्तविधयैवैकवाक्यत्वम् । इतिप्राप्तेऽभिधीयते-नात्रैकवाक्यार्थं । तथाहि-आद्योदाहरणे तावद्विनियोगभेदेनैवार्थभेदान्नार्थैकत्वं । न च मध्यांत प्रतीकेन समस्तस्यैवोभयत्र विनियोगान्नप्रत्येकमर्थभेद ? तत्रह्यादिमध्यान्त प्रतीकेनविनियोगः, यत्रमंत्रस्वरूपाम्नानवेळायामेव 'पदानां परस्पराकांक्षत्वम्, यथासंकर्षोदाहृतेमंत्रे । तत्राहि "प्राणायत्वेतिहिरण्यमभिव्यनिमी" त्युक्ते कथं हिरण्याभिव्यननस्य प्राणप्राप्त्यर्थतेत्यपेक्षिते परावतोदूरदेशा दन्तरिक्षाद्दिवश्च परिस्रवंतः प्राणः नः अस्मानागच्छतु यच्चपृथिव्याअधि उपरि आयुः तदप्यागच्छतु यतस्त्वाममृतत्वेन प्राणदानसामर्थ्यादिरयन्योन्या कांक्षत्वं मंत्रस्वरूपाम्नानवेळायामेवप्रतीयते । अतस्तत्रयुक्तोमध्यां त्यप्रतीकेनापिविनियोगः । प्रकृतेतु मंत्रस्वरूपालोचनवेळाया मिषे त्वोर्जेत्वेत्यनेन निराकांक्षत्वप्रतीतेः पश्चादवगम्यमानोऽविनियोग एकोऽपि नप्रतीकग्रहणायालं, पूर्वावगतनैरपेक्ष्यभंगापत्तेः । किमुतयदा यथापेक्षितोविनियोगभेद एवस्पष्टतरोवधार्यते तदाकः प्रसंगोम ध्यांत्यप्रतीकेन समस्तविनियोगस्य । किंचाख्यातकल्पकतावच्छेदकं तत्रगुरुभूतम् । पुनश्चकार्यकारणभावद्वयेऽपि कारणतावच्छेदकैक्या दृयभिचारप्रसंगः ।

यत्तु-सामर्थ्यबलेन इषेत्वेत्यस्योन्मार्जनांगत्वावगमात्तद्बाधार्थं सम स्तविनियोग इत्युक्तं । तत्सामर्थ्यकल्प्य श्रुतेः पूर्वमेव प्राप्तश्रुत्या छेदनांगत्वेन विनियोगेऽवगते सामर्थ्यस्य श्रुत्यकल्पकत्वात् दुन्मार्जनांग ताबोधकप्रमाणाभावे नोपेक्षणीयम् ।

तस्मादेवं क्रियाविशिष्टविभज्यमान साकांक्षत्वाभावात् भिन्नवा क्यत्वात्प्रतीके .युक्तो यजुर्भेदः ।

द्वितीयोदाहरणेतु तात्पर्यैक्यत्वे विभज्यमानसाकांक्षत्वाभावान्न विभागमन्त्रवदेकवाक्यत्वं । न च लक्ष्मीं वांचयती त्यनेन सर्वेषां कल्पता मितिपदानां समुच्चयविधानात् देकस्मिन् लक्ष्मीप्रकाशने सादि

स्यावगते विभज्यमानसाकांक्षत्वोपपत्तिः, सकृदुच्चरितस्यैव पदस्यकॢप्तिबोधजनकत्वेनकॢप्तिबोधेनैकपदसाकांक्ष्यस्य बाधितत्वात् । कॢप्तीर्याचयतीत्यत्र च न कॢप्तिपदं कल्पतामिति पदपरं, तद्घटितमन्त्रपरं वा, लक्षणाप्रसङ्गात् । अपितु कॢप्तिरूपार्थपरमेव । नच कॢप्तिरूपार्थपरत्वे तस्योच्चारणानुकूलव्यापारत्वान्वि वाचयत्यन्तर्गत वाचिकर्मत्वानुपपत्तिः, वचपरिभाषणइत्यनुशासनबलेन वचेरभिधानार्थत्व, तस्याप त प्राप्यर्थस्य कर्मत्वोपपत्तेः । अतएव क्वाचित्को वचेरुच्चारणे प्रयोगो लाक्षणिकइत्यनुसन्धेय । एवञ्च कॢप्तिपदस्यार्थपरत्वावश्यकतापा त स्याच्च बहुवचनसंख्यया भेदावगते रर्थभेदो ऽप्यवसुलभएव । युक्तश्चोत्तराधिकरणन्यायेन यावत्प्रथमान्त कॢप्तिभेदइति न कपिञ्जलाधिकरणन्यायेन त्रित्वमात्रपर्यवसानाशङ्का । विभागमन्त्रेतु बहुवचनाभावात्कारकभेदस्यच स्वरूपेणासमवायितया एकस्यामपि क्रियायां स्तुतिमात्रार्थत्वेनोपपत्ते र्न भेदकतेति विशेषः ।

अतश्च कॢप्तीर्याचयतीत्यस्य कॢप्तिभेदकतयाप्युपपत्ते स्ततःमंत्रसमुच्चयस्य च मंत्राणां भिन्नार्थत्वादेवासिद्धे रर्थभेदावगमाद्विभज्यमानसाकांक्षत्वस्य च दूरपराहतत्वाद्वाक्यभेदावगमेन यजुर्भेदोपपत्तिः । प्रयोजनं प्रथमोदाहरणेस्पष्टमेव । द्वितीयेतुयावन्मंत्र क्रियावृत्तसन्धानमेकमंत्रपक्षेपेवा तत्तन्मन्त्रोच्चारणेसिद्धान्ते । पूर्वपक्षेतु सकृदेवतदनुसन्धानं समस्तोच्चारणेचेतिद्रष्टव्यम् ।

सूत्रंतु-समेष्वन्योन्य निराकांक्षेषु वाक्यभेदस्स्यादितिस्पष्टम् ।

## इति वाक्यभेदाधिकरणम् ॥१५॥

# अथ अनुषंगाधिकरणम् ॥

॥१॥ सू - अनुषंगोवाक्यसमाप्ति स्सर्वेषु तुल्ययोगित्वात ॥२-१-४१॥

ज्योतिष्टोमे तिसृणामुपसदां द्वितीयतृतीयचतुर्थेष्वहस्सु पूर्वाह्णा पराह्णभेदेन द्विरावृत्त्यानुष्ठीयमानानां क्रमेणोदितायां मंत्रत्रयमुपसदङ्ग भूतोपहोमांगत्वेनसमाम्नातम् । तथाच, — " अग्नेयाशयातनूर्वर्षिष्ठो ग्रवचो अपावधींत्वेषवचो अपावधींस्वाहा " इति । द्वितीयतृतीयोस्तु " यातेअग्नेरजाशया यातेअग्नेहराशया " इति । एतेषांच मन्त्राणां क्रमेणैकैकस्यतत्तदहःक्रियमाणोपसदंगभूतहोमागत्वेऽप्यविवादः । तयो स्तयोर्मन्त्रयो र्यच्छन्दस्त्रीलिङ्गनिर्देशा त्तीवाचकपदसाकांक्षतावगते स्तत्स्यं कश्चित्तत्परिपूरणसमर्थो वाक्यैकदेशः कल्पनीयः । नचा ध्ययनविधिना ध्ययनोपायनियमा त्कथमनधीतस्य तदेकवाक्य त्वोपपत्ति रितिवाच्यम्, मापद्यपठिते वेदेतन्नियमेऽपि अनधीते यथा दिपदवदेववैदिकदेशत्वोपपत्तेः । ततश्चावश्यकल्पनीये वाक्यैकदेशे किंलौकिकोऽध्याहर्तव्यः उतवैदिकएवतनू रित्यादि र्याद्यमन्त्रैकदेशो ऽनुषंजनीय इतिसन्देहः ।

अत्रानुषंगपक्षे आम्नानस्य सर्वार्थत्वेनैव साधयिष्यमाणत्वेनानुष क्तस्याम्नातत्वेन मन्त्रत्वस्यापञ्जुष्टस्याप्युपपत्तेः पूर्वंच यजुःपरिमाण चिन्तात्मकत्वेन संगत्युपपत्तिः ।

तत्रवैदिकशेष आद्यानन्तरपठितत्वा दपेक्षितदेशपाठाच्चाद्यस्यैव स्वारस्येन सम्बद्धयते नानन्तरयो रिति तावदविवादम् । अतश्च गृह्यमाणविशेषा त्प्रयाजादिवत्सर्वार्थं एवायमाम्नात इति नैवाशङ्कि तुंशक्यम् । नचविशेषस्यासंबंधेन निराकांक्षत्वा त्युत्तरयोस्सा कांक्षत्वात्तदन्वयोपपत्तिः, तयोरप्यनिबद्धलौकिकशेषग्रहणेन निरा कांक्षयो र्याद्यमन्त्रमात्रनिबद्धवैदिकशेषग्रहणानुपपत्तेः । अतएव अग्निम्

यथाप्रस्तुतम्" इत्यस्य लौकिकाग्निग्रहणेनापि निराकांक्षत्वात्कार्यविशेषपुरस्कारेण निषिद्धानां वचनव्यतिरेकेण पतनाद्यहेतुत्वमशक्याना माहवनीयादीनामग्निपदेनाग्रहणमिति सप्तमे वक्ष्यते । एवं च सत्यपि यदि लौकिकस्यानुकृतत्वादाग्नेयीमंत्रन्यायेनापि प्रकृतस्यैव वैदिकस्य तनूरित्यादौ ग्रहणमित्याशंक्येत ? तत्र आग्नेयीमन्त्रस्यान्यत्रविनियुक्तस्यापि कुशादर्शादेव इतिवत्तस्यान्यत्रविनियोगे मन्त्रवाक्यानपाये मन्त्रैकदेशस्य तनूरित्यादेरन्यत्रनयने मन्त्रवाक्यानापत्तिः । अतश्चोपस्थितस्यान्यस्यापि स एव गृह्यते । नत्वेतावता तस्य मन्त्रत्वं यजुष्ट्वं वा वाक्यमापादयितुमिति न तद्भ्रेषे यजुर्भ्रेषनिमित्त प्रायश्चित्तापत्तिरिति प्राप्ते —

अभिधीयते । वैदिकस्यैव सर्वत्रानुषंगः, तस्य सर्वार्थमाम्नातत्वात् । यथैव हि तनूरित्यादे राद्यमंत्रसम्बन्धे आकांक्षासन्निधियोग्यता कारणं तथैवोत्तरमंत्रद्वयसंबन्धेऽपि । तथाहि । आकांक्षा तावद्द्विशेष्यविषयिण्यास्स्वस्यैवोत्तरयोरप्यविशिष्टा । योग्यता च निराकांक्षीकरणसामर्थ्यरूपा पूर्वस्मिन्निवोत्तरयोरप्यविशिष्टैव । सन्निधिस्तु यद्यप्यानंतर्यरूपो नाविशिष्टः, तथाप्यसम्बंधिपदाव्यवधानरूपो विशिष्ट एव । नह्यानंतर्यमेव सन्निधिशब्दबोधकारणं, तदभावेऽपि देवदत्तगामानयेत्यादौ देवदत्तादिपदानामानयनान्वयदर्शनात्; अपितु असम्बन्धिपदाव्यवधानमेव । गोशब्दस्य च सत्यपि व्यवधायकत्वे आनयनान्वयित्वेन नासंबन्धित्वम् । अतश्च प्रकृतेऽप्याद्यवद्द्वितीयतृतीयेऽपि चोक्तरूपसन्निधिरविशिष्टः । नच द्वितीये सन्निध्युपपत्तावपि तृतीये तेनैव व्यवहितत्वात्कथं सन्निधानोपपत्तिरिति वाच्यम्, द्वितीयस्यापि शेषान्वययोग्यत्वेन गोपदवदेवासम्बन्धित्वाभावात् । अतश्चासम्बन्धिपदाव्यवधानरूपस्य सन्निधानस्य सर्वेष्वविशेषात्सर्वार्थमाम्नानावगते स्सर्वसम्बन्धोपपत्तिः । अत एवैकस्यैवाव्यवहितानन्तर्यं । यथापेक्षितश्च स्वपाठोत्तरकाले, पाठोऽप्यर्कं

चित्रकरः,सर्वमंत्राव्यवहितानंतर्यस्य सकृत्पाठे शक्यत्वेना वृत्तपाठस्य चाकांक्षादित्रयेणैव सर्वार्थत्वज्ञानोपपत्ते रनर्थकत्वेन सर्वान्तपाठनियमस्यचा पादयितुमशक्यत्वेन एकाव्यवधानस्या वर्जनीयत्वात् । इतरयोरपेक्षितदेशोच्चारणस्य लिंगेनैव ज्ञातुं शक्यत्वाच्च । ततश्च युक्त माकांक्षादित्रयसाधारण्या त्सर्वार्थत्वम् । नचैव मव्यवधानस्यान्वयाप्रयोजकत्वे समानपदप्रत्यासत्त्यायागस्यैवकरणत्वोक्ति विरुध्येतेति वाच्यम्, अव्यवहितानंतर्यस्यान्वयतात्पर्यग्राहकत्वाभावे प्यन्वयनियामकत्वोपपत्तेः । तत्रहि फलनिरूपकत्वं किं यागस्योतसोमादेरित्यनियमे प्राप्ते नियामकमात्रं पदप्रत्यासत्तिः । प्रकृतेत्वाकांक्षादित्रयसाधारण्यात्सर्वत्रनियमेनैव सम्बन्धप्राप्तेर्नानंतर्यस्यनियामकत्वोपपत्तिः । नह्येकस्यनैराकांक्ष्येणेतरयोर्नैराकांक्ष्यं शक्यते वक्तुं । ततश्च यथैव प्रयाजादीनां सत्यप्याग्नेयाव्यवधाने अग्नीषोमीयादे रप्याकांक्षादित्रयसाधारण्यात्सर्वार्थत्व मेवमिहापिद्रष्टव्यम् । तस्मा द्वैदिकस्य सर्वसम्बन्धरूपानुषंगएवयुक्तः, नतुक्रमिकान्वयांगीकारेणैकसम्बंधएव वैदिकत्वम् इतरसम्बंधेषुलौकिकत्वमिति। यत श्शेषान्वयं विनाआद्यस्येवोत्तरयोरपि न परिसमाप्ति रतस्सर्वेषु तुल्याम्नानादनुषंगइतिसूत्रार्थः । प्रयोजनंतु तद्भेदे यजुर्भेदसमाप्तिस्स्पष्टैव ।

एवं तावदनेकेषा मुत्थिताकांक्षाणां सन्निधावाम्नायमानश्शेषस्सर्वत्रानुषज्यतइत्युक्तम् । इदानीं तूत्थाप्याकांक्षाणा मनेकेषां सन्निधावाम्नायमान श्शेषस्सर्वत्रानुषज्यते नवेति विषयव्याप्त्यर्थं तस्मिन्नेव सूत्रे विचार्यते । ज्योतिष्टोमे यजमानपावनार्थामन्त्राः- " चित्पतिस्त्वापुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सवितापुनात्वि " त्येवंविधाः क्रियापदान्तत्वेन स्वतोनिराकांक्षाः पठिताः । तेषामन्ते "अच्छिद्रेण पवित्रेण वसोस्सूर्यस्य रश्मिभि"रिति क्रियासाकांक्ष श्शेषस्समाम्नातः । स किं मनन्तरेणैव मन्त्रेणसम्बध्यते उतसर्वैरपीति विचारः ।

तत्र तेषां तावत्स्वरूपेण निराकांक्षत्वा च्छेषाकांक्ष येवाकांक्षामुत्थाप्य सम्बन्धोवाच्यः । उतचैकपदसम्बन्धेनैव निरा

कांक्षस्य शेषस्य इतराकांक्षा व्यापकत्वे प्रमाणाभावात् नियामकाभावे क्षायो यागादावित्य नन्तर्यस्य नियामकत्वोपपत्ते न सर्वत्रानुषङ्ग । नचैवमपि यजमानं पावयतीति विधिनाविहितस्यैकस्यैव पावनस्य त्रिभिरपि मन्त्रैः प्रकाशनादच्छिद्रादेश्च पूर्वसाधनीभूत प्रकाश्यमानपावनक्रियाकरण प्रकाशनार्थत्वा त्पूर्वमन्त्रयो स्त्यन्तिममन्त्रवत् प्रयोगोपपत्तिरितिवाच्य, पावनक्रियैक्येपि मन्त्रभेदेन तत्प्रकाशनानां भेदान्तिम प्रकाशनविषयीभूत पावनक्रियाकरणप्रकाशनार्थस्यैवा तन्त्रयो द्वयगतत्वेन चित्रपत्यादि कर्तृव्यवस्थावदेव करणव्यवस्थाया अप्युपपत्ते. । नचात्रमन्त्राणां विकल्प येनैकस्मिन्नेव प्रकाशने त्रयाणां व्रीहियवयोरिव धर्माणामव्यवस्थापत्ति, सत्यपि दृष्टार्थत्वे त्रिभिर्यजमानं वाचयतीति वचनात् पार्थसारथि मिश्रधृता समुच्चयोपपत्ते । अतश्च विकल्पोक्ति यांज्ञिकाचार्यविसंवादिनी वार्तिककारीयातिशय्यार्थैव । अतश्च त्र्यपरस्य छिद्रादे स्वर्षापाये प्रयाजादिव त्सकृत्प्रयुक्त स्यैव सर्वोपकारकत्वोपपत्ते न प्रत्येक प्रयोगावृत्त्यानुषङ्गोपपत्ति ।

वस्तुतस्तु बोधायनादिकल्पपर्यालोचनया पावनस्यापि मुखनाभिगुल्फप्रदेशभेदेन त्रिरभ्यासा देकैक मन्त्रस्यैकैकाभ्यास करणत्वावगमा दानन्तर्यविशेषेणाच्छिद्रादे गुल्फप्रदेशसंस्कारार्थ पावनक्रियाभ्यास प्रकाशकपदैकवाक्यतया विजातीया पूर्वसाधनीभूत पावनक्रियाभ्यासो गत्वावगते 'पयसा मैत्रावरुण श्रीणाती" तिव दभ्यासान्तरे मानत्वभावा द्व्यवस्थोपपत्ति स्सुलभैव । अतो नेदृशस्थले अनुषङ्ग इति प्राप्तेऽभिधीयते –

आकांक्षादित्रयसाधारण्यात् अत्रापि सर्वार्थाम्नानावगमेनानुषङ्गेणैव वाक्यपरिसमाप्ति । तथाहि-सन्निधियोग्यत्वे तावत्पूर्ववद्द्वया विशिष्टे । आकांक्षाचापि यथैवान्तिमस्यै तदाकांक्षावशेन कल्प्या तथैव पूर्वयोरपि । प्रकृतानन्तर्यस्य नियामकतासम्भवति । तत्रहि तन्नियामक यत्र तत्प्रवृत्ते पूर्वं विकल्पेनानेकेषु प्राप्ति, यथा प्रतिपदाधिकरणसिद्धान्तरीत्या यागद्वा त्र्यो । प्रकृतत्र्यस्याप्याकांक्षाणामपि तेषां विनियमनाविरहेण प्रधानतया

र्प्रतिप्रधानावृत्तिन्यायेन च प्रत्येकं समुच्चयेनैव शेषग्राहित्वागते नियामकानाकांक्षत्वात् नानन्तर्यस्य तन्नियामकत्वोपपत्तिः । अतश्च यथैवानेकहविष्कासु विकृतिषु श्रुतानामुपहोमानां विनिगमनाविरहेण प्रधानत्वे न च सर्वहविर्गतामेवाकांक्षां प्रकल्प्य समुच्चयेन सर्वार्थावगते नियामकाकांक्षाविरहेण नानन्तर्यस्य नियामकत्वं तथैव प्रकृतेपि पूर्ववदेव सर्वार्थं मन्त्रानावगते युक्तोनुषंगः ।

## इत्यनुषंगाधिकरणम् ॥ १६ ॥

---

## अथ व्यवेताननुषंगाधिकरणम् ।

॥ १ ॥ सू - व्यवायान्नानुषज्येत ॥ २–१–४९ ॥

असम्बन्धिपदाव्यवधाने सत्यनुषंगे साधिते यत्र सम्बन्धिपदव्यवधानं तत्रानुषंगो नास्तीति प्रत्युदाहरणार्थमिदं सूत्रं। यथा-"सन्ते वायुर्वातेनागच्छतां संयजत्रैरंगानि सयज्ञपतिराशिषे " इत्यत्र गच्छतामित्यस्यां गानीत्यनेन तावद्योग्यत्वेनासम्बन्धात् असम्बन्धिपदव्यवधानेन संयज्ञपतिराशिषेत्यनेन सत्यपि साकांक्षत्वे योग्यत्वेच सन्निधानाभावान्नानुषंगः । अतस्संयजत्रैरंगानीत्यत्र गच्छतामित्यस्यैव सयज्ञपतिराशिषेत्यत्रापि गच्छतामिति पदमध्याहर्तव्यम् ।

न चानयो र्व्याकांक्षत्वेपि गमनरूपस्यैवार्थस्य योग्यताबलादन्वय्यान्वयोपपत्तेः विमर्द एकस्याप्यादानेनैवेति वाच्यम्, तत्तत्पदार्थशाब्दबोधत्वावच्छिन्नंप्रति वृत्तिमत्त्वसम्बन्धेन तत्पदज्ञानस्यैव कारणत्वात् । अन्यथा देवदत्तः पचतीति केनचिदुक्ते प्रत्यक्षदृष्टेनैव चेष्टायेन धर्मार्थाशान्तिपूर्वः क्षिपतीति प्रश्नानापत्तिः । अस्मन्मतेतु